॥ श्रीकृष्णचैतन्यचन्द्रस्यसहस्रनामस्तोत्रम् ॥

नमस्तस्मै भगवते चैतन्याय महात्मने ।
कलिकल्मषनाशाय भवाब्धितारणाय च ॥ १॥
ब्रह्मणा हरिदासेन श्रीरूपाय प्रकाशितम् ।
तत्सर्वं कथयिष्यामि सावधानं निशामय ॥ २॥
श्रुत्वैवं वैष्णवाः सर्वे प्रहृष्टाः प्रेमविह्वलाः ।
सादरं परिपप्रच्छुः प्रेमगद्गदया गिरा ॥ ३॥
वैष्णवानां हि कृपया स्मृत्वा वाक्यं पितुस्तदा ।
सणोन्त्य भगवद्रूपं नामानि कथयामि वै ॥ ४॥
ध्यानम् ।
ॐ अस्य श्रीकृष्णचैतन्यसहस्रनामस्तोत्रस्य
नारायणः ऋषिः अनुष्टुप् छन्दः श्रीमद्भगवद्भक्तिर्देवता
श्रीराधाकृष्णप्रीतये श्रीकृष्णचैतन्य नामसहस्रपथे विनियोगः ।
ॐ नमः प्रेमसमुच्चयाय गोपीजनवल्लभाय महात्मने ।
ॐ विश्वम्भरः सदानन्दो विश्वजिद्विश्वभावनः ।
महानुभावो विश्वात्मा गौराङ्गो गौरभावनः ॥ ५॥
हेमप्रभो दीर्घबाहुर्दीर्घग्रीवः शुचिर्वसुः ।
चैतन्यश्चेतनश्चेतश्चित्तरूपी प्रभुः स्वयम् ॥ ६॥
राधाङ्गी राधिकाभावो राधान्वेशी प्रियंवदः ।
नीतिज्ञः सर्वधर्मज्ञो भक्तिमान् पुरुषोत्तमः ॥ ७॥
अनुभावी महाधैर्यः शास्त्रज्ञो नित्यनूतनः ।
प्रभावी भगवान् कृष्णश्चैतन्यो रसविग्रहः ॥ ८॥
अनादिनिधनो धाता धरणीमन्दनः शुचिः ।
वराङ्गश्चञ्चलो दक्षः प्रतापी साधुसङ्गतः ॥ ९॥
उन्मादी उन्मदो वीरो धीरग्राणी रसप्रियः ।
रक्ताम्बरो दण्डधरः संन्यासी यतिभूषणः ॥ १०॥
दण्डी छत्री चक्रपाणिः कृपालुः सर्वदर्शनः ।
निरायुधः सर्वशास्ता कलिदोषप्रनाशनः ॥ ११॥
गुरुवर्यः कृपासिन्धुर्विक्रमी च जनार्दनः ।
म्लेच्छग्राही कुनीतिघ्नो दुष्टहारी कृपाकुलः ॥ १२॥
ब्रह्मचारी यतिवरो ब्रह्मण्यो ब्राह्मणः सुधीः ।
द्विजराजश्चक्रवर्ती कविः कृपणवत्सलः ॥ १३॥
निरीहः पावकोऽर्थज्ञो निर्धूमः पावकोपमः ।
नारवन्द्यो हराकारो भविष्णुर्नरनायकः ॥ १४॥
दानवीरो युद्धवीरो दयावीरो वृकोदरः ।
ज्ञानवीरो महावीरः शान्तिवीरः प्रतापनः ॥ १५॥
श्रीजिष्णुर्भ्रमिको जिष्णुः सहिष्णुश्चारुदर्शनः ।

नरो वरीयान् दुर्दर्शो नवद्वीपसुधाकरः ॥ १६॥
चन्द्रहास्यश्चन्द्रनखो बलिमदुदरो बली ।
सूर्यप्रभः सूर्यकांशुः सूर्याङ्गो मणिभूषणः ॥ १७॥
कम्भुकण्ठः कपोलश्रीर्निम्ननाभिः सुलोचनः ।
जगन्नाथसुतो विप्रो रत्नाङ्गो रत्नभूषणः ॥ १८॥
तीर्थार्थी तीर्थदस्तीर्थस्तीर्थाङ्गस्तीर्थसाधकः ।
तीर्थास्पदस्तीर्थवासस्तीर्थसेवी निराश्रयः ॥ १९॥
तीर्थालादी तीर्थप्रदो ब्राह्मको ब्रह्मणो भ्रमी ।
श्रीवासपण्डितानन्दो रामानन्दप्रियङ्करः ॥ २०॥
गदाधरप्रियो दासो विक्रमी शङ्करप्रियः ।
योगी योगप्रदो योगो योगकारी त्रियोगकृत् ॥ २१॥
सर्वः सर्वस्वदो भूमा सर्वाङ्गः सर्वसम्भवः ।
वाणिर्बाणायुधो वादी वाचस्पतिरयोनिजः ॥ २२॥
बुद्धिः सत्यं बलं तेजो धृतिमान् जङ्गमकृतिः ।
मुरारिर्वर्धनो धाता नृहरिः मानवर्धनः ॥ २३॥
निष्कर्मा कर्मदो नाथः कर्मज्ञः कर्मनाशकः ।
अनर्घः कारकः कर्म क्रियार्हः कर्मबाधकः ॥ २४॥
निर्गुणो गुणवानीशो विधाता सामगोऽजितः ।
जितश्वासो जितप्राणो जितानङ्गो जितेन्द्रियः ॥ २५॥
कृष्णभावी कृष्णनामी कृष्णात्मा कृष्णनायकः ।
अद्वैतो द्वैतसाहित्यो द्विभावः पालको वशी ॥ २६॥
श्रीवासः श्रीधराहव्यो हलनायकसारवित् ।
विश्वरूपानुजश्चन्द्रो वरीयान् माधवोऽच्युतः ॥ २७॥
रूपासक्तः सदाचारो गुणज्ञो बहुभावकः ।
गुणहीनो गुणातीतो गुणग्राही गुणार्णवः ॥ २८॥
ब्रह्मानन्दो नित्यानन्दः प्रेमानन्दोऽतिनन्दकः ।
निन्द्यहारी निन्द्यवर्जी निन्द्यघ्नः परितोषकः ॥ २९॥
यज्ञबाहुर्विनीतात्मा नामयज्ञप्रचारकः ।
कलिवर्यः सुचिनांशुः पर्यासुः पावकोपमः ॥ ३०॥
हिरण्यगर्भः सूक्ष्मात्मा वैराज्यो विरजापतिः ।
विलासी प्रभावी स्वांशी परावस्थः शिरोमणिः ॥ ३१॥
मायाघ्नो मायिको मायी मायावादी विचक्षणः ।
कृष्णाच्छादी कृष्णजल्पी विषयघ्नो निराकृतिः ॥ ३२॥
सङ्कल्पशून्यो मायीशो मायाद्वेशी व्रजप्रियः ।
व्रजाधीशो व्रजपतिर्गोपगोकुलनन्दनः ॥ ३३॥
व्रजवासी व्रजभावो व्रजनायकसत्तमः ।
गुप्तप्रियो गुप्तभावो वाञ्छितः सत्कुलाश्रयः ॥ ३४॥
रागानुगो रागसिन्धू रागात्मा रागवर्धनः ।

रागोद्गतः प्रेमसाक्षी भट्टनाथः सनातनः ॥ ३५॥
गोपालभट्टगः प्रीतो लोकनाथप्रियः पटुः ।
द्विभुजः षड्भुजो रूपी राजदर्पविनाशनः ॥ ३६॥
काशिमिश्रप्रियो वन्द्यो वन्दनीयः शचिप्रसूः ।
मिश्रपुरन्दराधिसो रघुनाथप्रियो रयः ॥ ३७॥
सार्वभौमदर्पहारी अमोघारिर्वसुप्रियः ।
सहजः सहजाधीशः शाश्वतः प्रणयातुरः ॥ ३८॥
किलकिञ्चिदभावार्तः पाण्डुगण्डः शुचातुरः ।
प्रलापी बहुवाक् शुद्धः ऋजुर्वक्रगतिः शिवः ॥ ३९॥
घत्तायितोऽरविन्दाक्षः प्रेमवैचित्यलक्षकः ।
प्रियाभिमानी चतुरः प्रियावर्ती प्रियोन्मुखः ॥ ४०॥
लोमाञ्चितः कम्पधरः अश्रुमुखो विशोकहा ।
हास्यप्रियो हास्यकारी हास्ययुग् हास्यनागरः ॥ ४१॥
हास्यग्रामी हास्यकरस्त्रिभङ्गी नर्तनाकुलः ।
ऊर्ध्वलोमा ऊर्ध्वहस्त ऊर्ध्वरावी विकारवान् ॥ ४२॥
भवोल्लासी धीरशान्तो धीरङ्गो धीरनायकः ।
देवास्पदो देवधामा देवदेवो मनोभवः ॥ ४३॥
हेमाद्रिर्हेमलावण्यः सुमेरुर्ब्रह्मसादनः ।
ऐरावतस्वर्णकान्तिः शरघ्नो वाञ्छितप्रदः ॥ ४४॥
करोभोरूः सुदीर्घाक्षः कम्पभ्रूचक्षुनासिकः ।
नामग्रन्थी नामसङ्ख्या भावबद्धस्तृषाहरः ॥ ४५॥
पापाकर्षी पापहारी पापघ्नः पापशोधकः ।
दर्पहा धनदोऽरिघ्नो मानहा रिपुहा मधुः ॥ ४६॥
रूपहा वेशहा दिव्यो दीनबन्धुः कृपामयः ।
सुधक्षरः सुधास्वादी सुधामा कमनीयकः ॥ ४७॥
निर्मुक्तो मुक्तिदो मुक्तो मुक्ताख्यो मुक्तिबाधकः ।
निःशङ्को निरहङ्कारो निर्वैरो विपदापहः ॥ ४८॥
विदग्धो नवलावण्यो नवद्वीपद्विज प्रभुः ।
निरङ्कुशो देववन्द्यः सुराचार्यः सुरारिहा ॥ ४९॥
सुरवर्यो निन्धहारी वादघ्नः परितोषकः ।
सुप्रकाशो बृहद्बाहुर्मित्रज्ञः कविभूषणः ॥ ५०॥
वरप्रदो वरपाङ्गो वरयुग् वरनायकः ।
पुष्पहासः पद्मगन्धिः पद्मरागः प्रजागरः ॥ ५१॥
ऊर्ध्वगः सत्पथाचारी प्राणद ऊर्ध्वगायकः ।
जनप्रियो जनाह्लादो जनकऋषि जनस्पृहः ॥ ५२॥
अजन्मा जन्मनिलयो जनानदो जनार्द्रधीः ।
जगन्नाथो जगद्वन्धुर्जगद्देवो जगत्पतिः ॥ ५३॥
जनकारी जनामोदो जनकानन्दसाग्रहः ।

कलिप्रियः कलिश्लाघ्यः कलिमानविवर्धनः ॥ ५४॥
कलिवर्यः सदानन्दः कलिकृत् कलिधन्यमान् ।
वर्धामनः श्रुतिधरः वर्धनो वृद्धिदायकः ॥ ५५॥
सम्पदः शारणो दक्षो घृणाङ्गी कलिरक्षकः ।
कलिधन्यः समयज्ञः कलिपुण्यप्रकाशकः ॥ ५६॥
निश्चिन्तो धीरललितो धीरवाक् प्रेयसीप्रियः ।
वामास्पर्शी वामभावो वामरूपो मनोहरः ॥ ५७॥
अतीन्द्रियः सुराध्यक्षो लोकाध्यक्षः कृतकृतः ।
युगादिकृद् युगकरो युगज्ञो युगनायकः ॥ ५८॥
युगावर्तो युगासीमः कालवान् कालशक्तिधृक् ।
प्रणयः शाश्वतो हृष्टो विश्वजिद् बुद्धिमोहनः ॥ ५९॥
सन्ध्याता ध्यानकृद् ध्यानी ध्यानमङ्गलसन्धिमान् ।
विस्रुतात्मा हृदिस्थिरो ग्रामनियप्रग्राहकः ॥ ६०॥
स्वरमूर्च्छी स्वरालापी स्वरमूर्तिविभूषणः ।
गानग्राही गानलुब्धो गायको गानवर्धनः ॥ ६१॥
गानमान्यो ह्यप्रमेयः सत्कर्ता विश्वधृक् सहः ।
क्षीराब्धिकमथाकारः प्रेमगर्भझषाकृतिः ॥ ६२॥
बीभत्सुर्भावहृदयः अदृश्यो बर्हिदर्शकः ।
ज्ञानरुद्धो धीरबुद्धिरखिलात्मप्रियः सुधीः ॥ ६३॥
अमेयः सर्वविद्वानुर्बभ्रूर्बहुशिरो रुचिः ।
उरुश्रवाः महादीर्घो वृषकर्मा वृषाकृतिः ॥ ६४॥
श्रुतिस्मृतिधरो वेदः श्रुतिज्ञः श्रुतिबाधकः ।
हृदिस्पृश आस आत्मा श्रुतिसारो विचक्षणः ॥ ६५॥
कलापी निरनुग्राही वैद्यविद्याप्रचारकः ।
मीमांसकारिर्वेदाङ्ग वेदार्थप्रभवो गतिः ॥ ६६॥
परावरज्ञो दुष्पारो विरहाङ्गी सतां गतिः ।
असङ्ख्येयोऽप्रमेयात्मा सिद्धिदः सिद्धिसाधनः ॥ ६७॥
धर्मसेतुर्धर्मपरो धर्मात्मा धर्मभावनः ।
उदीर्णसंशयच्छिन्नो विभूतिः शाश्वतः स्थिरः ॥ ६८॥
शुद्धात्मा शोभनोत्कण्ठोऽनिर्देश्यः साधनप्रियः ।
ग्रन्थप्रियो ग्रन्थमयः शास्त्रयोनिर्महाशयः ॥ ६९॥
अवर्णो वर्णनिलयो नाश्रमी चतुराश्रमः ।
अविप्र विप्रकृत् स्तुत्यो राजन्यो राज्यनाशकः ॥ ७०॥
अवश्यो वश्यताधीनः श्रीभक्तिव्यवसायकः ।
मनोजवः पुरयिता भक्तिकीर्तिरनामयः ॥ ७१॥
निधिवर्जी भक्तिनिधिर्दुर्लभो दुर्गभावकृत् ।
कर्तनीः कीर्तिरतुलः अमृतो मुरजप्रियः ॥ ७२॥
शृङ्गारः पञ्चमो भावो भावयोनिरनन्तरः ।

भक्तिजित् प्रेमभोजी च नवभक्तिप्रचारकः ॥ ७३॥
त्रिगर्तस्त्रिगुणामोदस्त्रिवाञ्छी प्रीतिवर्धनः ।
नियन्ता श्रमगोऽतीतः पोषणो विगतज्वरः ॥ ७४॥
प्रेमज्वरो विमानार्हः अर्थहा स्वप्ननाशनः ।
उत्तारणो नामपुण्यः पापपुण्यविवर्जितः ॥ ७५॥
अपराधहरः पाल्यः स्वस्तिदः स्वस्तिभूषणः ।
पूतात्मा पूतगः पूतः पूतभावो महास्वनः ॥ ७६॥
क्षेत्रज्ञः क्षेत्रविजयी क्षेत्रवासो जगत्प्रसूः ।
भयहा भयदो भास्वान् गौणभावसमन्वितः ॥ ७७॥
मण्डितो मण्डलकरो वैजयन्तीपवित्रकः ।
चित्राङ्गश्चित्रितश्चित्रो भक्तचित्तप्रकाशकः ॥ ७८॥
बुद्धिगो बुद्धिदो बुद्धिर्बुद्धिधृग् बुद्धिवर्धनः ।
प्रेमाद्रिधृक् प्रेमवहो रतिवोढ रतिस्पृशः ॥ ७९॥
प्रेमचक्षुः प्रेमगह्वः प्रेमहृत् प्रेमपूरकः ।
गम्भीरगो बहिर्वासो भावानुष्ठितगो पतिः ॥ ८०॥
नैकरूपो नैकभावो नैकात्मा नैकरूपधृक् ।
श्लथसन्धिः क्षीणधर्मस्त्यक्तपाप उरुश्रवः ॥ ८१॥
उरुगाय उरुग्रीव उरुभाव उरुक्रमः ।
निर्धूतो निर्मलो भावो निरीहो निरनुग्रहः ॥ ८२॥
निर्धूमोऽग्निः सुप्रतापस्तीव्रतापो हुताशनः ।
एको महद्भूतव्यापी पृथग्भूतः अनेकशः ॥ ८३॥
निर्णयी निरनुज्ञातो दुष्टग्रामनिवर्तकः ।
विप्रबन्धुः प्रियो रुच्यो रोचकाङ्गो नराधिपः ॥ ८४॥
लोकाध्यक्षः सुवर्णाभः कनकाब्जः शिखामणिः ।
हेमकुम्भो धर्मसेतुर्लोकनाथो जगद्गुरुः ॥ ८५॥
लोहिताक्षो नामकर्मा भावस्थो हृद्गुहाशयः ।
रसप्राणो रतिज्येष्ठो रसाब्धिरतिराकुलः ॥ ८६॥
भावसिन्धुर्भक्तिमेघो रसवर्षी जनाकुलः ।
पीताब्जो नीलपीताभो रतिभोक्ता रसायनः ॥ ८७॥
अव्यक्तः स्वर्णराजीवो विवर्णी साधुदर्शनः ।
अमृत्युः मृत्युदोऽरुद्धः सन्धाता मृत्युवञ्चकः ॥ ८८॥
प्रेमोन्मत्तः कीर्तनर्त्तः सङ्कीर्तनपिता सुरः ।
भक्तिग्रामः सुसिद्धार्थः सिद्धिदः सिद्धिसाधनः ॥ ८९॥
प्रेमोदरः प्रेमवाहू लोकभर्ता दिशाम्पतिः ।
अन्तः कृष्णो बहिर्गौरो दर्शको रतिविस्तरः ॥ ९०॥
सङ्कल्पसिद्धो वाञ्छात्मा अतुलः सच्छरीरभृत् ।
ऋद्ध्यार्थः करुणापाङ्गो नदकृद् भक्तवत्सलः ॥ ९१॥
अमत्सरः परानन्दः कौपीनी भक्तिपोषकः ।

अकैतवो नाममाली वेगवान् पूर्णलक्षणः ॥ ९२॥
मिताशनो विवर्ताक्षो व्यवसाया व्यवस्थितः ।
रतिस्थानो रतिवनः पश्चात्तुष्टः शमाकुलः ॥ ९३॥
क्षोभणो विरभो मार्गो मार्गधृग् वर्त्मदर्शकः ।
नीचाश्रमी नीचमानी विस्तारो बीजमव्ययः ॥ ९४॥
मोहकायः सूक्ष्मगतिर्महेज्यः सत्त्रवर्धनः ।
सुमुखः स्वापनोऽनादिः सुकृत् पापविदारणः ॥ ९५॥
श्रीनिवासो गभीरात्मा शृङ्गारकनकादृतः ।
गभीरो गहनो वेधा साङ्गोपाङ्गो वृषप्रियः ॥ ९६॥
उदीर्णरागो वैचित्री श्रीकरः स्तवनार्हकः ।
अश्रुचक्षुर्जलाब्यङ्ग पूरितो रतिपूरकः ॥ ९७॥
स्तोत्रायणः स्तवाध्यक्षः स्तवनीयः स्तवाकुलः ।
ऊर्ध्वरेतः सन्निवासः प्रेममूर्तिः शतानलः ॥ ९८॥
भक्तबन्धुर्लोकबन्धुः प्रेमबन्धुः शताकुलः ।
सत्यमेधा श्रुतिधरः सर्वशस्त्रभृतांवरः ॥ ९९॥
भक्तिद्वारो भक्तिगृहः प्रेमागारो निरोधहा ।
उद्घूर्णो घूर्णितमना आघूर्नितकलेवरः ॥ १००॥
भवभ्रान्तिजसन्देहः प्रेमराशिः शुचापहः ।
कृपाचार्यः प्रेमसङ्गो वयुनः स्थिरयौवनः ॥ १०१॥
सिन्धुगः प्रेमसङ्गाहः प्रेमवश्यो विचक्षणः ।
पद्मकिञ्जल्कसङ्काशः प्रेमादारो नियामकः ॥ १०२॥
विरक्तो विगतारातिर्नापेक्षो नारदादृतः ।
नतस्थो दक्षिणः क्षामः शठजीवप्रतारकः ॥ १०३॥
नामप्रवर्तकोऽनर्थो धर्मोगुर्वादिपुरुषः ।
न्यग्रोधो जनको जातो वैनत्यो भक्तिपादपः ॥ १०४॥
आत्ममोहः प्रेमलीधः आत्मभावानुगो विराट् ।
माधुर्यवत् स्वात्मरतो गौरख्यो विप्ररूपधृक् ॥ १०५॥
राधारूपी महाभावी राध्यो राधनतत्परः ।
गोपीनाथात्मकोऽदृश्यः स्वाधिकारप्रसाधकः ॥ १०६॥
नित्यास्पदो नित्यरूपी नित्यभावप्रकाशकः ।
सुस्थभावश्चपलधीः स्वच्छगो भक्तिपोषकः ॥ १०७॥
सर्वत्रगस्तीर्थभूतो हृदिस्थः कमलासनः ।
सर्वभावानुगाधीशः सर्वमङ्गलकारकः ॥ १०८॥
इत्येतत्कथितं नित्यं साहस्रं नामसुन्दरम् ।
गोलोकवासिनो विष्णोर्गौररूपस्य शार्ङ्गिनः ॥ १०९॥
इदं गौरसहस्राख्याम् आमयघ्नं शुचापहम् ।
प्रेमभक्तिप्रदं नृणां गोविन्दाकर्षकं परम् ॥ ११०॥
प्रातःकाले च मध्याह्ने सन्ध्यायां मध्यरात्रिके ।

यः पठेत्प्रयतो भक्त्या चैतन्ये लभते रतिम् ॥ १११॥
नामात्मको गौरदेवो यस्य चेतसि वर्तते ।
स सर्वं विषयं त्यक्त्वा भावानन्दो भवेद्ध्रुवम् ॥ ११२॥
यस्मै कस्मै न दातव्यम् दाने तु भक्तिहा भवेत् ।
विनीताय प्रशान्ताय गौरभक्ताय धीमते ॥ ११३॥
तस्मै देयं ततो ग्राह्यमिति वैष्णवशासनम् ॥
इति श्रीकविकर्णपूरविरचितम्
श्रीकृष्णचैतन्यचन्द्रस्य
सहस्रनामस्तोत्रं सम्पूर्णम् ॥